विष्णुपुराणे,—

"दिधीषुपतितोन्मत्तवङ्कविराजिकौटकैः ।

बन्धकीबन्धकीभर्त्तृक्षुद्रान्वितकथैः सह ॥

तथातिव्ययशीलैश्च परिवादपरैः शठैः ।

बुधो मैत्रीं विकुर्वीत नैकः पन्थानमाश्रयेत्" ॥

मार्कण्डेयपुराणे,—

"न सर्वशंकिभिर्नित्यं न तु दैवपरैर्नरैः" ।

मैत्रीं कुर्य्यादित्यनुषङ्गः ।

मनुः,—

"पाषण्डिनोविकर्मस्थान् वैड़ालव्रतिकान् शठान् ।

हैतुकान् वकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्" ॥

मनुः,—

"न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतं ।

न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्" ॥

उच्छिष्टं भोजनपात्रशिष्टं, हविः पुरोडाशादि, देवनैवेद्यश्राद्ध-दत्तानि । तत्रापि हविःशब्दप्रयोगात् । उच्छिष्टनिषेधो नाश्रित-शूद्रविषयः ।

उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि वा" ।

इति केचित् ।

मनुना आश्रितशूद्रे दानविधानात्, शङ्खलिखितौ,—"कृसरं पायसापूपमांसदधिमधुघृत कृष्णाजिनानि शूद्रेभ्यो न दद्यात्" । कश्चिदन्यत्र प्रकृतावित्ति । प्रकृतमुत्सवः । उत्सवादिषु विवाहादिषु

देयमित्यर्थः। विष्णुस्मृतौ,— तिलदानमपि निषिद्धं। कुलनाशनादि। मनुर्बौधायनश्चतुर्थे।

"कुविवाहैः क्रियालोपैर्वेदाध्ययनेन च।
कुलान्य(१)कुलतां यान्ति ब्राह्मणातिक्रमेण च।
शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः॥
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया।
अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणा॥
कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः।
मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि॥
कुलसंख्यां च गच्छन्ति कर्षन्ति च महद्यशः"।

शिल्पं चित्रादिजीविकालेन, व्यवहारेण ऋणादानादिना, यानैः शकटादिभिः। यमशातातपव्यासाः,—

देवद्रव्यविनाशेन ब्रह्मणातिक्रमेण च।
कुलान्यकुलतां यान्ति गवां (२)चातिक्रमेण च॥ देवद्रव्यं, देवोद्देशेन यद्द्रव्यं।

अथ त्याज्यात्याज्याः।

विष्णुर्मनुश्च,—

"एनस्विभिरनिर्णिक्तैर्नार्थं किंचित्समाचरेत्।
कृतनिर्णेजनांश्चैतान् जुगुप्सेन्तु कदाचन"॥

एनस्विनः महापातकिनः।

(१) कुलान्याशु विनश्यन्ति।
(२) ब्राह्मणातिक्रमेण च।

वशिष्ठः,—

"पतितः पिता परित्याज्यो माता पुत्रं प्रति न पतति"

बौधायनः,—

"न पतितैः सव्यवहारो विद्यते, पतितामपि मातरं बिभृयादनुभाषमाणः" ।

गौतमः,—

"त्यजेत् पितरं राज्ञः शूद्रयाजकं, शूद्रायापाचकं, शूद्रार्थयाजकं, वेदविप्लावकं भ्रूणहनं, यश्चान्त्यावसायिभिः सह संवसेदन्त्यावसायिन्यां च ।" शूद्रार्थयाजकं शूद्रधनेन यज्ञकर्त्तारं, वेदविप्लावकं अनध्याये वेदाध्यापकं । यत्तु शङ्खलिखितौ,— "अत्याज्याः, माता पिता सपिण्डा गुणवन्तः सर्वं एवात्याज्याः, गुणवन्तो विद्यावन्तः । श्रौतस्मार्त्तानुष्ठानरतश्च" ।

देवलः,—

"पितरं भ्रातरं पुत्रं पुत्रिकां भगिनीं स्नुषां ।
न त्यजेद्यज्ञ(१)भोगार्थं दारानपि कदाचन ॥
मातृत्यागो हि शास्त्रेषु नोपदिष्टः कदाचन ।
पतिता चाभिशप्ता च न माता त्यागमर्हति ॥
कुलवृद्धा वयोवृद्धा ज्ञानवृद्धाश्च मानवाः ।
मौन्यवृद्धाश्च संपूज्या यथा स्वगुणगौरवात्" ॥

तदेतेषां मातृपितृव्यतिरिक्तानां पञ्चमहापातकित्वेऽपि न त्याज्यत्वमित्येवं परं । मातुस्तु महापातकित्वेऽपि अत्याज्यत्वम् ।

(१) दैवभोगार्थं ।

हारीतेन,— तु आचार्य्यर्त्विक्पितॄणामत्याज्यत्वमुक्तं.—

"अशुद्धौ च परित्यागः पातकेऽयाज्ययाजके ।
उपाध्याये च याज्ये च न पितृत्याग उच्यते" ॥

पातके महापातकव्यतिरिक्ते, अयाज्ययाजने च उपाध्यायर्त्विग्याज्यानां त्यागोऽपि न पितुः, महापातकेषु पितरमपीत्यर्थः, एतच्च पतितत्यागविधिं विनापि पातित्ये सर्व्वव्यवहारवर्जनं । पापसंसर्गस्यैव दोषावहत्वात् । न तु त्यक्तसंसर्गत्वेन दोषनिमित्तत्वं । त्यागविधिस्तु च ज्ञातीनां पुरुषार्थः । तदतिक्रमे तेषामेव दुरितं, न तु त्यागविध्यभावेन पातकिनो व्यवहार्य्यत्वं । यत्तु वशिष्ठेन त्यागविध्यनन्तरं अत ऊर्द्धं तेन सधर्मयेयुः, तद्धर्मिणो वा स्युः, सधर्मपतिइति, तत्सूतका(१)तुरविषयं, त्यागे कृते तु सूतकमृतकयोः सूतकमृतकं न कर्त्तव्यं, करणे तत्साम्यापत्तेः, रिक्थ पिण्डोदकानि व्यवर्त्तेतइति शङ्खलिखितवचनात् आद्यदायभागादिकमपि त्यागे सति न भवति । न पतितमात्रे वचनाभावात्, एवं चाशौचव्यतिरिक्तव्यवहारः त्यागं विनापि पतितैः सह न कर्त्तव्यः । पतिताभिशस्तदुरात्मकुलक्षयकरस्य तस्य पुरो बान्धवानां राज्ञश्च समक्षं दोषानभिख्याप्य, पुनः पुनरवश्यं लभस्वेति न यदेवमपि अनवस्थितमतिः आचार्यो निनयपात्रमादाय पूर्वमपापमपसव्यं कृत्वा वामपादेन दक्षिणां दिशं न्युब्जयेत् । पात्रमपसव्यं कृत्वापविद्धादिकं कृत्वा शौचमुपासीरन् । अपापादिकस्य रिक्थपिण्डोदकानि निव-

(१) तत्सम्पर्ककारकादिविषयं ।

न्ते, अवस्थां लभस्वेति प्रायश्चित्तं कुर्वीत। सभायां पुनः पुनर्वक्तव्यं। यदि प्रायश्चित्तं न करोति तदोक्तविधिना त्यागः कार्य्यः, मनुवचनान्निन्दितेऽहनि सायाह्ने सर्वे ज्ञातयः कुर्य्युः। वशिष्ठस्मृतेः संमार्ज्जनाद्यसंस्कृतस्थानस्थघटेन दासी दासो सवर्णपुत्राद्यन्यतमद्वारा जलानयनं, जलानेता जलकुम्भमपसव्यो वामपादेन दक्षिणाभिमुखो घटमन्युब्जमधोमुखं कुर्य्यात्। अमुकशर्म्मणे पतितायेदं जलमुपतिष्ठतामिति गैरिकरिक्तेषु कूपेषु, ज्ञातयः प्रकीर्णकेशा अपसव्यास्तमन्वालभेरन्। ततः स्नात्वाऽस्य मनुवचनादहोरात्रं अशौचमासीरन्। गौतमवचनाच्च सर्वाणि प्रेतकार्य्याणि जीवत एव अस्य कुर्य्युः पुत्रादयः। पूरकपिण्डषोडशश्राद्धादिकं।

मनुः—

"एवं तस्य विधिं कुर्य्याद्योषित्सु पतितास्वपि।
वस्त्रान्नपानदेयं तु वसेत् पुण्यगृहान्तिके" ॥

त्यागे कृते यदि प्रायश्चित्तं करोति तदा पयः पानीयं हतं वरणं मधूपलभ्य नद्यां पुण्यजलायां स्नायात्। ब्राह्मणा ब्रूयुश्चरितं त्वयेति। चरितमिति प्रतिवचनं। वशिष्ठवचनाद्धिरण्मयं मृण्मयं वा कुम्भं नदीजलपूर्णं तस्मै च दद्युः।

"तदापः प्रतिगृह्णाति; शान्ता द्यौः, शान्ता पृथिवी; शान्तं शिवमन्तरीक्षं यो रोचनस्तमिह गृह्णामीति" यजुर्भिः। पावमानीभिरितरमन्त्रिभिश्च कूष्माण्डिभिर्होमः। ततस्तेनोदकेनैव आपो हिष्ठेति तिसृभिरभिषिञ्चेयुः। ततः सर्वेषां ज्ञातीनां तेनैव सह नद्यां स्नानं। जलकुम्भापवर्जनं। गोभ्यो घासदानं। गोभिर्घा

भक्षिते ततो गृहं प्रविश्य जातकर्मादि तस्य कर्त्तव्यम्। गां हिरण्यं ब्राह्मणेभ्यो दद्यात्। आचार्य्याय चैवं। ततोऽनेन सह सर्वं कार्यं च पुनरुद्धारविधिस्त्यागविध्यभावेन भवति। प्रायश्चित्तमात्र व्यवहाराः। व्यवहार्य्यत्वात्।

मनुः,—

"बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः।
शरणागतहन्तॄंश्च न तैः सम्भूय संविशेत्" ॥

एतैः सह कृते च प्रायश्चित्ते व्यवहारो वर्ज्यः। उदकपानपदं व्यवहारमात्रोपलक्षकम्। स्मृत्यन्तरात् स्त्रीघ्नानपि इति शारीराणि स्नातकव्रतानि। अथ वाचिकं तच्च वाच्यावाच्यभेदेन द्विविधं। तत्र वाच्यं सर्वश्रेष्ठं विष्णोर्नाम।

विष्णुपुराणे,—

"यन्नामकीर्त्तनं पुंसां विलापनमनुत्तमं।
मैत्रेयाशेषपापानां धातूनामिव पावकः" ॥

गीतायां,—

"सततं कीर्त्तयन्तो मां यतन्तश्च दृढव्रताः।

महाभारते,—

"एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्च्चेन्नरः सदा" ॥

विष्णुधर्मे,—

"चक्रायुधस्य नामानि सदा सर्वत्र कीर्त्तयेत्।
नाशौचं कीर्त्तने तस्य स पवित्रकरो यतः ॥

अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् ।
संकीर्त्तितमघं पुंसो दहत्येधो यथानलः" ॥

विष्णुधर्म्मोत्तरे,—

"आर्त्ता विषण्णा विषयाभिभूताः,
घोरेषु च व्याधिषु वर्त्तमानाः
संकीर्त्त्य नारायणशब्दमात्रं
विमुक्तदुःखाः सुखिनो भवन्ति" ।

विष्णुरहस्ये,—

"सांहानिस्तन्महच्छिद्रं स मोहः स च विभ्रमः ।
यन्मुहूर्त्तं क्षणं वापि वासुदेवं न कीर्त्तयेत्" ॥

महाभारते,—

"प्राणप्रयाणपाथेयं संसारव्याधिभेषज ।
दुःखशोका(१)परित्राणं हरिरित्यक्षरद्वय" ॥

रामायणे,—

"न तत्र दानवाः सन्ति न पिशाचा न राक्षसाः ।
यत्र देवो गृहे विष्णुः कीर्त्त्यते हि सदा सता" ॥

विष्णुधर्म्मोत्तरे,—

"नामसंकीर्त्तनं नित्यं क्षुतिप्रस्खलितादिषु ।
यः करोति महाभाग! तस्य तुष्यति केशवः" ॥

(१) परित्राणं।

पुनर्विष्णुपुराणे,—

"अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैर्यथा"॥

तथा अर्थविशेषे नामविशेषमुक्त्वा

"सर्वार्थशक्तियुक्तस्य वासुदेवस्य चक्रिणः।
यथाभिरोचते नाम तत्सर्वार्थेषु कीर्त्तयेत्"॥

महाभारते,—

"एष मे सर्वधर्म्माणां धर्मोऽधिकतमो मतः।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्च्चेन्नरः सदा"॥

एवं सहस्रनामगजेन्द्रमोक्षणादिकीर्त्तनमपि तत्तत्फलार्थं।

तथा मनुः,—

"वेदाभ्यासरतं क्षान्तं पञ्चयज्ञक्रियारतं।
न स्पृशन्तीह पापानि महापातकजान्यपि"॥

तथा,—

"परिनिष्ठितकार्यस्तु स्वाध्यायेनैव हि द्विजः"।

तत्र मन्त्रभागः मात्रादिप्रणुपरः। कर्मभागोऽपि यज्ञरूपविष्णु-नामकीर्त्तनपरः। इत्यादिसर्वस्मृतिपुराणेषु कोटिशो वाक्यानि विस्तरभयान्न लिख्यन्ते।

तथा भविष्यपुराणे,—

"महादेव! महादेव! महादेवेति चैव हि।
पठेदेतन्नियमवान् शृणुयाद्वापि यः सदा"॥

यद्देहभेदमासाद्य,—

"मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे ।
इतीरयन्ति ये नित्यं न हि तान् बाधते कलिः ॥
कीर्त्तयन्ति च ये रुद्रं सकृद्यत्र मानवाः ।
सर्वपापैः प्रमुच्यन्ते सप्तजन्मकृतैरपि ॥
अश्वमेधसहस्रस्य सहस्रगुणितस्य च ।
फलं प्राप्नोति यो भक्त्या महादेवेति कीर्त्तयेत् ॥
प्रसङ्गात् कौतुकाल्लोभाद्भयादज्ञानतोऽपि वा ।
हरहरेत्युच्चरन्मर्त्यः सर्वपापैः प्रमुच्यते ॥
त्रिपुरहर! हराऽऽदिदेव! शम्भो!
त्रिनयन! शंकर! रुद्र! शूलपाणे!।
भव! शरणमितीरयन्ति ये वै,
भवजलधौ न विशन्ति ते मनुष्याः" ॥

एवमन्यान्यपि शिवकीर्त्तनपराणि वाक्यानि विस्तरभयान्न लिख्यन्ते ।

शाम्बपुराणे—

"विकर्त्तनो विवस्वांश्च मार्त्तण्डो भास्करो रविः ।
लोकप्रकाशकः श्रीमान् लोकचक्षुर्ग्रहेश्वरः ॥
लोकसाक्षी त्रिलोकेशः कर्त्ता हर्त्ता तमिस्रहा ।
तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ॥
गभस्तिहस्तो ब्रह्मा च सर्वदेवनमस्कृतः ।
यत्र तेन महाबाहो! हे सन्ध्यास्तमनोदये ॥
स्तौति मां प्रणतो भक्त्या सर्वपापैः प्रमुच्यते" ।

भविष्यपुराणे,—

"उपवासी रविं यस्तु भक्त्या ध्यायति मानवः।
तन्नामजापी तत्कर्मरतस्तद्गतमानसः॥
निष्कामं पूजयेद्देवं परं ब्रह्माधिगच्छति"।

विष्णुपुराणे—

"ये लाभार्थेऽतिदुर्गेति वेदगर्भेऽम्बिकेति च।
भद्रेति भद्रकालीति क्षेमा क्षेमंकरीति च॥
प्रातश्चैवापराह्णे च कीर्त्तयि(१)ष्यन्ति मानवाः।
तेषां हि प्रार्थितं सर्वं मत्प्रसादाद्भविष्यति"॥

मार्कण्डेयपुराणे,—

. सावर्णिः सूर्य्यतनय इत्यारभ्य सावर्णिर्भविता मनुरित्यन्तं देवीमाहात्म्यं प्रकृत्य—

"मधुकैटभनाशं च महिषासुरसूदनं।
कीर्त्तयिष्यन्ति ये तद्वद्वधं शुम्भनिशुम्भयोः॥
न तेषां दुष्कृतं किञ्चिद्दुष्कृतोत्था न चापदः।
भविष्यति न दारिद्र्यं न चैवेष्टवियोजनं"॥ इत्यादि।

विष्णुपुराणे—

"गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति"॥

गङ्गामधिकृत्य—

या पावयति भूतानि कीर्त्तिता च दिने दिने।

(१) स्तोष्यन्ति इति पुस्तकान्तरपाठः।

महाभारते,—

"कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहं ।
य एवं सततं ब्रूयात्सोऽपि पापात् प्रमुच्यते" ॥

तथा—

"अहं काशीं गमिष्यामि तत्रैव निवसाम्यहं ।
इति ब्रुवाणः सततं काशीवासफलं लभेत्" ॥

स्कन्दपुराणे नन्दिनं प्रतीश्वरवाक्यं ।

"अनामयस्तेऽथो वा नाम कीर्त्तयता तव ।
सोऽश्वमेधफलं चैव लभते नात्र संशयः" ॥

मत्स्यपुराणे,—

"कार्त्तवीर्य्यार्जुनो नाम राजा बाहुसहस्रभृत् ।
योऽस्य कीर्त्तयते नाम कल्यमुत्थाय मानवः ॥
न तस्य वित्तनाशः स्यान्नष्टं च लभते ध्रुवं" ।

विष्णुधर्म्मे,—

"नमोऽस्तु ते कार्त्तवीर्य्येत्यभिध्यायति चैव यः ।
तिलप्रस्थप्रदानस्य नरः पुण्यमवाप्नुति" ॥

स्कन्दपुराणे,—

"सोमनन्दिनीति यः प्रोक्का कर्त्तारं प्रतिपद्यते ।
न तस्य दिपिशार्दूलभयं कुर्वन्ति कुत्रचित्" ॥

तथा—

"कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनं" ॥

अथ सत्यवचनं ।

मनुधर्मौ,—

"सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियं ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः" ॥

एतेन प्रियं सत्यं च मिलितं द्वयं वक्तव्यमित्युक्तं भवति ।

हारीतः—

अनृतमधिकृत्य, चतुर्विधं भवति, पणितानृतं, प्रत्ययानृतं, सुकृतानृतं, साधारणमिति, विक्रेतुरसद्गुणकीर्त्तनं, क्रेतुर्गुणापह्नवः, दोषकीर्त्तनं च पणितानृतं, एतच्च कितववृत्तिरूपं निषिद्धं। प्रत्ययानृतं त्रिविधं, उपादाने परस्मै दापने चस्मिथ्यावचनं। तद्वि-प्रलम्भानृतं ।

साक्षिणः कूटसाक्षिके सभान्त्या मिथ्यावादित्वे साक्षित्वापलापे यदनृतं। यो द्वयोरर्थिप्रत्यर्थिनोर्जयपराजयनिर्णयकर्त्ता मैत्र्यात्-द्वेषाल्लोभाद्वा पक्षपातेन मिथ्या वदति तद्व्यवहारानृतं, एवं त्रिविधं, प्रत्ययानृतं, एतस्मिंश्चतुर्विधप्रत्ययानृते द्रव्यविशेषे पापविशेषः ।

यमः,—

"पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृतं हन्ति मास्म भूम्यनृतं वदेत् ॥
अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने ।
अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च ॥

गोवधस्तेषु सर्व्वेषु शयनेष्वासनेषु च।

अश्ववत् सर्वपापेषु खरोष्ट्राश्वतरीषु च" ॥

अयमर्थः, (१)पशुलोभेनानृतं वदन्, पञ्चसंख्यकान् स्ववन्धून्
निहन्ति नरके पातयति, गोऽर्थे ऽनृते दश, एवमन्येषु।

पुनर्हारीतः,—

"(२)विस्रम्भं त्रियुगं हन्ति पञ्च मिथ्यावचायतः।

छलात् सप्तगुणं हन्ति अनृतं व्यवहारतः" ॥

विस्रम्भसंज्ञके (३)छलानृते (४)त्रियुग्म जन्मवंशं (५)नरके पातयति।
मिथ्यावचायतः साक्षादनृते पञ्चगुणं पञ्चजन्मपर्य्यन्तं नरकपातः।
व्यवहारो जयपराजयानृते सप्तजन्मनरकपात इत्यर्थः।

पुनर्हारीतः,—

दानानृतमिज्यानृतं तपोऽनृतमिति त्रिविधं सुकृतानृतं।
दत्वा द्रव्यमदत्तमिति मिथ्यावचनं दानानृतं। यो यक्ष्यति-
इत्युक्त्वा न यजते महान्तं। क्रतु कर्त्तुमुद्यतः स्वल्पं करोति
तदिज्यानृतं। तत्र त्रेधा भवति प्रायश्चित्तं। यस्तु उपकल्प्यायथार्थं
तप्यति तत्तपोऽनृतं।

तत्र चान्द्रायणं।

"तत्र दानानृते देयद्रव्यविशेषेण दोषः।

(१) पशुलाभे। (२) विस्रम्भात् त्रियुगं।
(३) अन्यत्प्रदत्तान्यृते। (४) त्रियुगं।
(५) नरकपातः।

अश्वानृते जवा हन्ति द्वे तु वासोऽनृते तथा ।
चौणिरत्नानृते हन्ति चतुरं काञ्चनानृते ॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥
एतत्तु द्विगुणं हन्ति कृत्वा भूम्यनृतं नरः ।
ततस्तु द्विगुणं भूयो[१] भुवं दत्वा हिनस्ति यः" ॥

हारीतः,—

साधारणं नाम गोब्राह्मणहितं, आपत्कल्पः, स्वैराभिधानं इति त्रिविधं, तच्च त्रिविधमपि न दोषाय ।

एवं ह्याह स एव,—

"न नर्मयुक्तं वचनं हिनस्ति न स्वैरवाक्यं च न मैथुनार्थे ।
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि" ॥

देवलः,—

"[२]विवाहे ब्रह्म-हासार्थं प्राणिनां जीवितार्थ वा ।
आत्मनः प्राणहेतोर्वा न स्याद्देवानृतं वदन्" ॥

विहारे मैथुने ब्रह्महासार्थं, ब्रह्मार्थं ब्राह्मणनिमित्तं, हासार्थं गोष्ठ्यां ।

गौतमः,—

"सप्त पुरुषान् दहति मनसापि गुरोरनृतं वदन्नल्पेऽप्यर्थेषु,"
अनृतं द्विविधं, असत्यं विसम्वादश्च । दृष्टश्रुतकृतानामन्यथावचनमसत्यं । प्रागल्भ्यापगतानां अर्थप्रवर्त्तनं विसम्वादः, इति ।

---

(१) अभयं । (२) विहारे ।

तथा,—

"परप्राणोपघातार्थं परद्रव्यापहारतः।

विशिष्टोऽनृतवादस्तु न वृथाकथनादिषु"॥

अत्र विशेषमाह मनुः,—

"[1]बहूनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्"।

यत्र साक्षिणः [2]सत्यवदनेन द्विजानां वधः शंक्यते। तत्र साक्षी मिथ्या ब्रूयात्। इदं च न्यायमूलं, [3]सत्यवदनस्य मरणानुकूलव्यापाररूपत्वेन हिंसात्वात्, तस्यां च [4]दोषभूयस्त्वात्, साक्ष्यनृते दोषाल्पत्वादेव कर्त्तव्यं। [5]न साक्ष्यवदनस्य विधेयत्वेन निषेधाविषयत्वं, मिथ्या हि निषिध्यते सत्यं त्वर्थप्राप्त्यर्थं न विधेयम्।

सत्य[6]वदनस्य प्रियरूपस्य च ज्ञातकमतत्वेन विधेयत्वं नाप्रियस्य, तेन ब्राह्मणादिवधानुकूलसाक्षिसत्यवाक्यस्य निषिद्धत्वात्, स [7]सत्यानृतवदनस्य निषिद्धत्वेऽपि दोषाल[8]ल्पत्वात् कर्त्तव्यत्वं, तथा च प्रायश्चित्तं सारस्वतीष्टिः स्मर्यते, एवं साक्षिव्यतिरेकेणापि वर्णवधानुकूलसत्यवचनं निषिद्धं। "पञ्चानृतान्याहुरपातकानीति" वचनं, तत्र प्रतिप्रसवादेव निषेधाभावात् पातकाभावः तथा च, तत्र प्रायश्चित्तं स्मर्य्यते, ऋणमिति, सत्कर्षार्थवधोऽनृतं महापातकसमत्वेन गणनादित्यतिगर्हितं वर्जनीयं।

(१) वर्णिनां। (२) सत्यकथने।
(३) सत्यमुभयस्य। (४) दोषभयत्वात्।
(५) नयसाक्ष्यसत्यवचनस्य। (६) सत्यवचनस्य।
(७) तत्र। (८) दोषाल्पत्वात्।

मनुः,—

"भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत्"।

प्रथमभद्रपदं अभद्रवस्तुपरं, अभद्रं वस्तु भद्रमित्येवं ब्रूयात् मत्तभद्रमिति, पुण्यं प्रशस्तमिति ब्रूयात् इत्यापस्तम्बवचनाद्भद्रपदं पुण्यप्रशस्तादिपदोपलक्षणं, भद्रमित्येवेत्यनेन पदान्तरं पुण्यप्रशस्तादिपदं न वाच्यं भद्रमित्येव वाच्यमित्यर्थः, आपस्तम्बः,— "अधेनुं धेनुं भद्रमित्येव ब्रूयात्"। धेनुभव्याशब्दो धेनुभविष्यत्यर्थे, धेनुभवायामुपगमः। पारस्करः, "गर्भिणीं विजयेति ब्रूयात्, सकुलमिति न कुलं, कपालमिति कपालं, मणिधेनुरितीन्द्रधेनुः"।

महाभारते,—

"पुण्यानां शोभनं पुण्यं हताणामुद्धृता कृषिः।
बहुकारं च वाचानां वाह्ये वाच्यां तथा गवां॥
सम्पन्नं भोजनं ब्रूयात् पानीये तर्पणं तथा।
सुष्टवं पायसे ब्रूयाद्वाच्यं कृशरे तथा॥
श्मश्रुकर्मणि संप्राप्ते क्षुते स्नाते तु भोजने।
व्याधितानां च सर्वेषामायुष्यमभिनन्दितं"॥

पण्यद्रव्ये शोभनं पण्यमिति वाच्यं।

बहुवारं बहुशब्दं गवां मध्ये वाक्यं दातुमिति ब्रूयात्। भोजने-ओदनादौ पानीये पेयद्रव्ये दुग्धादौ। आयुष्यमभिनन्दितं ब्रूयादित्यर्थः।

यमः,—

"जीवेति क्षुवतो ब्रूयाज्जीवेत्युक्तः सहेति च"।

मिति उत्तरेण मन्त्रः। सूचामा चरणं[१] काननं प्रवेष्टुं कान-भिमन्त्रणं, नमो रुद्राय वनसदे स्वस्तिमांस पारयेति, पर्वता-रोहणे मन्त्रः। नमो रुद्राय गिरिसदे स्वस्तिमांस पारयेति। श्मशानाक्रमणे मन्त्रः। नमो रुद्राय [२]श्मशानसदे स्वस्तिमांस रय, गोष्ठप्रवेशे, नमो रुद्राय शकृत्पिण्डसदे स्वस्तिमांस पारय, स्वान[३] वातात्ततोवस्तमभिमन्त्रयते, शिवा चासिन वश्नोऽसि मस्तेऽस्तु मा मा हिंसीः, गर्जितमेघमभिमन्त्रयते, शिवा नो वर्षाः न्तु शिवा नः सन्तु विद्युतः, शिवा नस्तासन्तु यास्त्वं [४]दर्शसि इवहन्, शब्दं कुर्वाणां शृगालीमभिमन्त्रयते, शिवा नो नामासि स्वधितिस्तेतिजानः नमस्तेऽस्तु मा मा हिंसीः। शब्दायमानं पक्षिणमभिमन्त्रयते।

"हिरण्यवर्ण! शकुने देवानां प्रहितं शिव!।
यमदूत। नमस्तेऽस्तु किंलाकार्करिकोऽब्रवीत्" ॥

स्वचणस्य [५]वृक्षस्याभिमन्त्रणं। मा त्वाशनिर्मा परशुर्मा दण्डो-राजप्रेषितः।

"अङ्कुरास्ते प्ररोहन्तु निवाते त्वाभिवर्षतु।
अग्निष्टिष्टस्तु मा हिंसीत् स्वस्ति तेऽस्तु वनस्पते" ॥

स्वस्ति तेऽस्तु वनस्पते" म यदि किंचिद्व[६]तदपि लभते तत् प्रतिग्रहे मन्त्रः। द्यौस्त्वाददातु पृथिवी ददातु प्रतिग्रहा-

(१) सूचामार्गं। (२) पितृसदे।
(३) वस्त्रप्रान्तवाताहतो। (४) दर्शसि।
(५) देवस्य। (६) द्रोभूतिलादिग् न लभ्यते।

मौति । ओदनप्रतिपक्षे एतन्मन्त्र(१)पाठानन्तरं वक्ष्यमाणमन्त्राभ्यां प्राशनं, ब्रह्म प्राश्नात्विति प्रथमं, ब्रह्मत्वाप्राश्नात्विति द्वितीयं, अन्न-प्रतिपक्षे प्रतिग्रहानन्तरं प्राशनं, ब्रह्म प्राश्नात्विति प्रथमं, ब्रह्म त्वाप्राश्नात्विति द्वितीयं, ब्रह्म त्वापि बत्विति तृतीयं । इतिवाच्यं.

अथावाच्यानि, मनुः—

"अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत्" ।

एतच्चाग्निषोमीयपर्यन्तं तदूर्द्धं कात्यायनः, नामग्रहण-भोजने स्यातः कुर्वीतेति ।

"शुष्कं वैरं विवादं च न कुर्य्यात्केनचित् सह"।

वशिष्ठः,— "(२)न मित्रभाषणमिच्छेत" ।

मनुः,—

"ऋत्विक्पुरोहिताचार्यैः मातुलातिथिसंश्रितैः ।
वृद्धबालातुरैर्वैद्यैर्ज्ञातिसम्बन्धिबान्धवैः ॥
मातापितृभ्यां नारीभिर्भ्रात्रा पुत्रेण भार्यया ।
दुहित्रा वा सवर्गेण विवादं न समाचरेत् ॥
तस्मादेतैरधिक्षिप्तः स हेता संज्वरः सदा" ।

देवीपुराणे,—

"न कुर्य्याज्जनसंवादं न वैद्यैर्न च बालकैः ।
नृपबन्धुगुरुस्मानभिषक्ज्योतिःपुरोहितैः ।
विरोधेन महद्दुःखं प्रीत्या सुखमवाप्नुयात्" ॥

(१) प्राशना । (२) म्लेच्छभाषां शिक्षेत

वस्त्रादयो नृपस्य, ज्योतिः [1]ज्योतिष्कः, विष्णुपुराणे,— नारभेत कलिं प्राज्ञः, प्राग्दोषानुवृत्तौ, देवलः, परुषवचनं, अपवादः, पैशून्यं, अनृतं, वृथालापः, निष्ठुरं, इति वाङ्मयाष्ट, कुलविद्याचारदोषकथनात्मकं तत्कालक्रोधसन्तापजनकं वचः परुषं, परुषवचनमात्रमेव परोक्षे भाषणमपवादः, गुरुनृपतिबन्धुभृत्याद्ये कार्य्यनाशार्थं गुप्तं[3] पैशुन्यं, अनृतं प्रसिद्धं। देशराज्यपराश्रितहासक्रीडादिविषयं निष्प्रयोजनभाषणं, वृथालापः, गुह्याचार[4]मैथुनसम्बन्धकीर्त्तनं, अमेध्यनामग्रहणं, अमाङ्गल्यशब्दोच्चारणं निष्ठुरं।

विष्णुः,— "न कस्यचिन्मर्माणि स्पृशेत्"।

गोप्यशब्दकीर्त्तनं मर्मशब्दः।

हारीतः,—

"न वेदगुरुब्राह्मणगोपरिवादं कुर्य्यात्"।

आपस्तम्बः,—

"गोदक्षिणानां कुमार्य्याः परिवादांश्च वर्जयेत्"

गोरदक्षिणार्थेऽपि. दक्षिणानां वस्त्रहिरण्यादीनां आप इत्यधिहत्य।

वायुपुराणे,— "अचैताः परिवर्चीत।

न परिवदेत् तथा नचायुः परिवदेत्"॥

(१) ज्योतिषिकः। (२) जनपदं तु।
(३) गुप्तदोषकथनं। (४) गुह्याङ्गमैथुन

तथा,—

तावत्कालं दीक्षितो [1]भुवस्तनं परिवदेत् । तथा।

योग परिवदेद्यस्तु ध्यानिनं मोक्षकामिनं।

"स गच्छेन्नरकं घोरं श्रोतारश्च न संशयः"।

महाभारते,—

"सदा नारायणं देवं सर्वपापहरं [2]शुभ ।

निन्द्यमानो नरः शीघ्रं नरकं प्रतिपद्यते" ॥

वराहपुराणे,—

"विष्णुरुद्रान्तरं ब्रूया, लक्ष्मीगौर्य्यान्तरं तथा।

मर्त्यानां नास्तिकानां च काव्यं शास्त्रं विगर्हितं" ॥

अन्तरं भेदं, काव्यं कविकल्पितं न प्रमाणं।

यमपैठीनसी,—

"न निन्द्या ब्राह्मणा गावः काञ्चनं सलिलं स्त्रियः।

पृथिवी च षडेतानि यो निन्दति स निन्दितः" ॥

यमः,—

"यस्तु निन्दान् परं जीवन् प्रशंसत्यात्मनो गुणान्।

स वै वार्द्धुषिको नाम ब्रह्मवादिषु गर्हितं" ॥

वराहपुराणे,— अधिकं, पूर्वभुक्तस्त्रीनिन्दनं च निषिद्धं।

गौतमः,— न म्लेच्छाशुच्यधार्मिकैः सह संभाषेत, संभाष्य [3]पुण्यकृतो मनसा ध्यायेत्, ब्राह्मणेन सह संभाषेत।

(१) तद। (२) प्रभु।
(३) पुण्यकृतो।

पैठीनसिः— "मत्तोन्मत्तप्रमत्तैः सह न संभाषेत, परस्त्रियं रहसि न संभाषेत"।

शाङ्खायनगृह्ये,— "सूतकुदृकीभ्यां न संवदेत्"।

मनुः,—

"नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः"।

देवलः,—

"न नदीषु नदीं ब्रूयात् पर्वतेषु च पर्वतं।
नान्यं प्रशंसेत्तत्रस्थस्तीर्थेष्वायतनेषु च"॥

मनुः,—

"पाषण्डिनो विकर्मस्थान् वैडालव्रतिकान् शठान्।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्"॥

आपस्तम्बः,—

"न सौम्ये सपक्ष इति ब्रूयात्," पुनरापस्तम्बः,— "वर्जयेद्गुरोः स्तुतिं समक्षे, सुस्नातमिति च, आत्मप्रशंसां विवर्जयेदित्यर्थः"।

मनुः,— "न विगृह्य कथां (१)कुर्यात्"। विगृह्य आक्षिप्य।

पुनरापस्तम्बः,— वाक्येन वाक्यप्रतिघातमाचार्यस्य वर्जयेत्। विद्यया विद्यानां प्रतिघातं वर्जयेत्"।

शाङ्खायनगृह्ये,— "न समेत्याक्रोशनो पिशुनो कुले कुले चैतिहैतिकः स्यात्;" आक्रोशनो आक्रोशनवार्त्ता कुलं कुलः, गृहाद्गृहाद् गृहगमनशीलः। इति हैतिकः पुरावृत्तिकथनपरश्च न स्यात्।

---

(१) ब्रूयात्।

महाभारते,—

"महात्मनां हि गुह्यानि न वक्तव्यानि कर्हिचित्।
तत्कारं नामधेयं च ज्येष्ठानां परिवर्जयेत्॥
अधराणां समानानामुभयेषां न दुष्यति"।

देवलः,—

"यदुष्मानिति कुष्ठार्त्तं चाण्डालं ब्राह्मणेति च।
जुगुप्सा निन्दनं द्वेषात् परुषितं विशिष्यते॥
वृषलं वृषलेत्युक्त्वा पतितं पतितेति च।
सत्येनापि सदोषः स्यान्मिथ्या द्विगुण[१]वान् भवेत्"॥

यमः,—

"प्रत्यक्षं वा परोक्षं वा पतितं यदि पश्यति।
प्रत्यादेशो न कर्त्तव्यो रक्षेदात्मानमात्मना॥
यानि मिथ्याभिशस्तानां गच्छन्त्यश्रूणि शोचनात्।
पतिपुत्रान् पशून् हन्ति तेषां मिथ्याभिशंसिनां"॥

ब्रह्माण्डे,—

"मातृी देवीति चेत् यः प्रब्रवीति दुरात्मवान्।
अपि जातिशतं गत्वा न विमुच्येत किल्बिषात्"॥

शङ्खलिखितौ, - "देवेन्द्रधनुश्चन्द्रसूर्यपरिवेषोल्काः परस्मै न कथयेत्, नात्मनः प्रतिकूलं महाजनविरोधं कुर्यात्। गोष्ठीभिः संवध्येत, महाजना वेदार्थशास्त्रैर्विरोधः, गोष्ठी वृथाकथाः"।

(१) भाग

पैठीनसिः,—

"सुहृन्मरणमार्त्तिं वा न स्वयं श्रावयेत्परान्" ।

यमः,—

"तिथिं पक्षस्य न ब्रूयात् नक्षत्राणि न निर्दिशेत्" ।

अद्य द्वितीया, अद्य श्रवणेत्येवं न ख्याप[1]येत् । शङ्खलिखितौ,— नगच्छेदागारे चरन्तीं गां धयन्तीं[2] न चक्षीतान्यस्मै, न वाद्यानवाद्य[3]तामिति ब्रूयात्, अवाद्यं[4] वदि ।

हारीते विशेषः,—

"परस्वस्रावतीर्णां नाचक्षीत, पिबन्तं च परवत्सं" ।

तथा, आपस्तम्बः,—

"वर्जयेद्देवताभिधानं तथाप्ययतः वर्जयेच्च सुवर्णेषु सूचनं ।
परिभोगं यथोक्तेषु मत्सरः पुत्रशिष्ययोः"

सूचनं पैशून्य, परिभोगं पराभवं कृत्वा धनग्रहणं ।

वशिष्ठः,—

न म्लेच्छभाषां शिक्षेत, अष्टादशनरकहेतुकर्म्माधिकारे ।

हारीतः,—

"पारुष्यमनृतं वादश्रुतिविक्रयश्चेति वाग्जानि" ।

एवं विस्पष्टम[5]धीयात्, न शूद्रजनसन्निधावध्ययनं अनध्यायाध्ययनं च मनूक्तं वर्ज्यं, इत्यवाच्यानि, समाप्तं वाचिकं स्नातकव्रतं ॥

---

(१) ख्यापयेत् । (२) पायन्तीं ।
(३) न वाद्यायाने वाद्यतामिति ब्रूयात् । (४) अवाद्यं वदादि
(५) मभिधेयात् ।

अथ पादिजं, नरसिंहपुराणे,—

"नरसिंहगृहे नित्यं यः सम्मार्ज्जनमाचरेत् ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते" ॥

वराहपुराणे,—

"यावत्कानि प्रहाराणि भूमिसंमार्ज्जने ददुः ।
तावद्वर्षसहस्राणि विष्णुलोके महीयते" ॥ इत्यादि ।

तथोपलेपने,—

तत्रैव,—

"गोमयं गृह्य वै भूमिं मम वेश्मोपलेपयेत् ।
यावन्ति तु पदान्यत्र समन्तादुपलेपनात् ॥
तावद्वर्षसहस्राणि मद्भक्तो जायते तथा ।
यदि द्वादशवर्षाणि लिप्यते मम वेश्मनि ॥
जायते विष्णु(१)के वंशे धनधान्यसमाकुले"। इत्यादि ।

तथा,-

"स्थानोपलेपने कार्य्ये सलिलं यो ददाति मे ।
यावन्ति जलविन्दूनि लिप्यमानस्य सुन्दरि! ।
तावद्वर्षसहस्राणि विष्णुलोके महीयते" ॥

विष्णु(२)पुराणे,—

"अभ्युक्षणं च यः कुर्य्यात् पानीयेन सुरालये ।
स शान्तपापो भवति-- नात्र कार्य्या विचारणा" ॥

(१) विपुले वंशे । (२) विष्णुधर्म्मोत्तरे ।

स्कन्दपुराणे,—

"अगम्यागमने पापमभक्ष्यस्य च भक्षणे।
सर्वं तत्क्षयमाप्नोति मण्डयित्वा हरेर्गृहं"॥

तथा,—

"सा[१]न्द्रं वर्त्तिकोपेतं स्वस्तिकैश्च विभूषितं।
देवदेवस्य कुरुते[२] जयते भुवनत्रयं"॥

नरसिंहपुराणे,—

"निर्माल्यमप[३]नीयाथ तोयेन स्नाप्य केशवं।
नरसिंहाकृतिं राजन् सर्वपापैः प्रमुच्यते"॥

तथा,—

"यवगोधूमजैश्चूर्णैरुद्वर्त्त्योष्णेन वारिणा।
प्रक्षाल्य देवदेवेशं वारुणं लोकमश्नुते"॥

भविष्यपुराणे,—

"यावन्त्यः पांशुकणिका मार्जन्ते भास्करालये।
दिनानि दिवि तावन्ति तिष्ठत्यस्तमलो नरः"॥

तथा,—

"शिवमाल्यापनयनं पूजान्ते तत्र मार्जयेत्।
एकैकं तत्र तुल्यं स्याच्चान्द्रायणफलेन तु"॥

एवमन्येषामपि देवानां स्नानमार्जनादीनि तत्तच्छास्त्रोक्तानि।

(१) सान्द्रं वर्णकोपेतं। (२) क्रीडते भुवनत्रये।
(३) मपनीय।

मनुः,—

"धारयेद्वैणवीं यष्टिं सोदकं च कमण्डलुं" ।

तथा,—

सुवर्णरजतमुद्रिकाधारणं पूर्वमुक्तं, दर्भवटुकधारणं च ।

मनुः,—

"न कुर्वीत वृथाचेष्टां नवार्यञ्जलिना पिबेत्" ।

तथा,—

"न नखोद्दं च मृद्नीयान्न च्छिन्द्यात् करजैस्तृणं" ।

तथा स्वयं सोपानहौ हरेत् हस्तेनेति शेषः ॥

तथा,— न पाणिस्थं भुञ्जीत ।

तथा,—

"न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ।

न स्पृशेच्चैतदुच्छिष्टो न च स्नायादिनाततः ॥

केशग्रहान् प्रहारांश्च शिरस्येतान् विवर्जयेत् ।

न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः ॥

न स्पृशेत् पाणिनोच्छिष्टो-विप्रगोब्राह्मणानलान् ।

स्पृशेत तान् शुचिर्नित्यमद्भिः प्राणानुपस्पृशेत् ॥

गात्राणि चैव सर्वाणि नाभिं पाणितलेन तु" ।

कण्डूयेदात्मनः शिरः ।

"अनातुरः स्वानिखानि न स्पृशेदनिमित्ततः ।

रोमाणि च रहस्यानि सर्वाण्येव विवर्जयेत्" ॥

न पाणिपादचपलः

देवीपुराणे,—

"नेवाञ्जनं निषेवेत्तु दन्तधावनपूर्वकं"।

विष्णुपुराणे,—

"न कुर्य्यात् वस्त्रसंघर्षे न गृह्णीयाच्च नासिकां"।

महाभारते नन्द्याधिकारे,—

"ब्राह्मणैः कारयिष्यन्ति शुक्लाद्दन्तधावनं"।

नाङ्गनखवादनं कुर्यात्, न पाणिना जलमभिहन्यात्, नेष्टकाभिः फलानि पातयेत्, न फलैः फलानि, तथा छेदन भेदन लेखन विमर्दन विदलनास्फोटनादिनाकस्मात् कुर्यात्। अवस्फोटनं करादाघातेन विस्फोटनं॥

आपस्तम्बः,— "पृष्ठतस्तापानः पाणि न संश्लेषयेत्। गोत्रानुपस्पर्शनवर्जानुवृत्तौ स एवाह— "हस्तेन[1] भरणात्"।

शङ्खशातातपः,—

"उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः।
सुरापानेन तत्तुल्यं मनुराह प्रजापतिः"॥

वशिष्ठः,— "अग्निमापश्च न च युगपद्धारयेत्। नानानां[2] मनिवापं वर्जयेत्," मनिवापः संसर्गः, अयं[3] लौकिकाग्नि विषयः, वैदिकाग्नौ तु संसर्गविधेयात् प्रायश्चित्त विशेषः।

पैठीनसिः,—

"प्राणिनो हिंसितव्याश्च क्लिष्टपातं तु वर्जयेत् क्लिष्टपातं बहुक्लेशपूर्वकं।

(१) हस्तेन वाकारणात्। (२) नानाग्निनां। (३) च।

"नावपुरे कृथा[१]शम्यं गोकुलस्त्रीकुमारके ।
पुष्पस्नानोदकस्थाने मा[२]व्यावाहयेन तु ॥
निजनिधि[३]प्राप्तौ तथैव पुनरर्पयेत् । परस्य पशून् वोल्यान-
दर्भचणोवाच योजयेत् ॥

"मरवाधां न कुर्वीत जलवातायनादिभिः ।
माथं प्रातर्द्वारं भिचार्थं नावघट्टयेत् " ॥

जलायनं प्रणाली, वातायनं गवाक्षं, भिक्षार्थं भिक्षाहृत्यर्थं,
तथामिद्धमग्निं हस्ताभ्यां न स्पृशेत् ।

उशनाः,—

"न वस्त्रेण वीजयेत्, यं कंचिदपि" ।

महाभारते,—

"देवमाल्यापनयनं द्विजोच्छिष्टापमार्जनं
श्राकल्यपरिचर्या च गात्रसंवाहनानि च ।
श्रर्येकैकं नृपश्रेष्ठ! यो गतो व्यतिरिच्यते' ॥

तथा,—

"कपिलायां च दत्तायां यत्फलं ज्येष्ठपुष्करे ।
तत्फलं भरतश्रेष्ठ! विप्राणां पादधावने ॥
द्विजपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत् पुष्करपर्णेन पिबन्ति पितरो जलं" ॥

इति "पाखिजानि स्नातकव्रतानि" ॥

---

(१) कृथाशाम्यं गोशुच । (२) मौमानं वाहयेन्नतु ।
(३) निक्षेपो ।

अथ पादजानि।

नरसिंहपुराणे,—

"प्रदक्षिणेन चैकेन देवदेवस्य मन्दिरे।
पृथ्वीप्रदक्षिणफलं प्राप्य पश्चाद्धरिं व्रजेत्"॥

वराहपुराणे,—

"यस्तु प्रदक्षिणं कुर्य्यात् साष्टाङ्गं च प्रणामकं।
दशाश्वमेधस्य फलं प्राप्नुयान्नात्र संशयः"॥

भविष्यपुराणे,—

"कृत्वा प्रदक्षिणं भक्त्या शिवस्यायतने नरः।
अश्वमेधसहस्रस्य सुदीप्तस्य फलं लभेत्"॥

सूर्य्यमधिकृत्य तत्रैव,—

"कृत्वा प्रदक्षिणं यस्तु नमस्कारं प्रयोजयेत्।
राजसूयाश्वमेधाभ्यां स परं लभते फलं॥
त्रिःप्रदक्षिणं कृत्वा यो नमस्कुरुते रविं।
भूमौ गतेन शिरसा स याति परमां गतिं"॥
एवमन्यदेवानां प्रदक्षिणं।

स्कन्दपुराणे,—

"प्रदक्षिणं यः कुरुते पठेन्नाम सहस्रकं।
तुलसीपार्श्वतो नित्यं यज्ञायुतफलं लभेत्"॥

तथाऽश्वत्थप्रदक्षिणं सर्वपापक्षयार्थं। तत्र मन्त्रः,—

"अग्निगर्भ! शमीगर्भ! यज्ञगर्भ! सनातन!।
हिरण्यगर्भ! श्रीगर्भ! वेदगर्भ! नमोऽस्तु ते॥

चक्षुःस्पन्दं भुजस्पन्दं दुःस्वप्नं दुर्विचिन्तनं ।
शत्रूणां च समुत्थानं अश्वत्थ! शमयस्व मे ॥
एकादशोऽसि रुद्राणां वसूनामपि चाष्टमः ।
नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पलः ॥
त्वां दृष्ट्वा नश्यते पापं स्पृष्ट्वा लक्ष्मीर्विवर्द्धते ।
प्रदक्षिणाद्भवेदायुः सदाश्वत्थ! नमोऽस्तु ते" ॥

नारदः,—

"लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः" ॥

इत्युपक्रम्य,—

"प्रदक्षिणं तु कुर्वीत तथास्यायुर्न हीयते" ।

मनुः,—

"मृदङ्गं दैवतं विप्रं घृतं मधु चतुष्पथं ।
प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन्" ॥

आपस्तम्बः,— "प्रदक्षिणमग्निमाह्रियमाणं नाप्रतिष्ठितं भूमौ । प्रदक्षिणीकृत्योपेयात् । भूमौ स्थापयित्वा प्रदक्षिणीकृत्य गच्छेदित्यर्थः" ।

मार्कण्डेयपुराणे,—

"विद्याधिकगुरुं चैव द्विजः कुर्यात् प्रदक्षिणं" ।

शङ्खलिखितौ, प्रदक्षिणं कुर्यादित्यनुवृत्तौ विष्णुः,— "अग्निब्राह्मणगणिका-पूर्णकुम्भादर्शच्छत्रध्वजपताकाः श्रीवृक्षवर्द्धमाननन्द्यावर्त्तांश्च तामरसचामराश्वगजान् दधिक्षीरमधुसिद्धार्थकांश्च"

वीणाचन्दनायुधादिगोमयफलपुष्पामशाकगोरोचनादूर्वाप्ररोहांश्च उष्णीषालंकारमपि कनकरजतवस्त्रासनयानानि। भृंगारपशुकुमारीमालाश्च श्रीवृक्षवर्द्धमाननन्दावर्त्ताः प्रविशेन्निषेधः। स्वर्णादिरचिता ज्योतिःशास्त्रप्रसिद्धाः, उष्णीषालंकारो मुकुटं"।

गौतमः,-योगक्षेमार्थमीश्वरमधिगच्छेदनार्थं, अन्यत्र देवगुरुधार्मिकेभ्यः, अलब्धलाभो योगः। लब्धपरिपालनं क्षेमः, नान्यमित्यनेनापीश्वरातिरिक्तस्य योगक्षेमसमर्थत्वादेव तत्र गमनप्रसङ्गाभावेऽप्यनी[1]श्वरस्येश्वरपरा योगक्षेमसम्पादकत्वेऽपि न गन्तव्येति दर्शयति, एवं देवगुरुधार्मिकाणामगन्तव्यत्वप्राप्तौ योगक्षेमासमर्थत्वेऽपि तेषां धर्मार्थे गन्तव्यत्वमाह अन्यत्रेति।

"रक्षितारं च राजानं ब्राह्मणं च बहुश्रुतं।
अभिगम्याप[2]संपूज्य सद्यः पापात् प्रमुच्यते"॥

अथ गमनविधिः, याज्ञवल्क्यः,— "अयं मे वज्र इत्येवं [3]मन्त्रंमंत्रमुदीरयन्"। "वर्षत्याप्रावृतो गच्छेत्"।

विष्णुपुराणे,—

"वर्षातपादिके छत्री दण्डी रात्र्यटवीषु च।
शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत्"॥

एवं च अयं मे वज्रः, पाप्मानमपहनदिति मंत्रसमाप्तिपर्यन्तमप्रावृतस्य गमनं। तदनन्तरं छत्रधारणं।

(१) श्वरस्य इति। (२) पूज्याय।
(३) एतन्त्रं।

"नोर्द्ध्वं तिर्यग्विदूरं वा निरीक्ष्य पर्यटेद्बुधः ।
युगमात्रं [1]महीपृष्ठं नरो गच्छेद्वि[2]लोकयन्" ॥

रथारोहणप्रसङ्गे, सारथिना युक्तो रथ इत्युक्ते[3]मर्त्रमित्यनेन रथसमीपागमनं । [4]रथान्तरं साम[5]मीति [6]दक्षिणचक्रालम्भ., दक्षिणमीत्युत्तरस्य वामदेव्यामसीति ईषादण्डाग्रं, रथोपवेशनस्थानाभिमर्षणं, अङ्गाऽन्यङ्गा[7]वरतो रथं स्थातुं स्थातमग्निमद्भिः सम्वत्सरं तं, दूरेहेतिरिन्द्रियावाध्वतन्तिस्थो[8]ऽघ्नयः पयः पारयन्तु नमो माणिचराय, उपविश्य दक्षिणं धूर्यं प्रतोदेन प्रेरयति, देवालयं दृष्ट्वा दूराद्वरोहणं, विप्रनिकटेऽवरोहणं, गवां मध्येऽवरोहणं, [8]सुहृत्संमारुह्य जपः, इह रतिरिह मध्वा मास्विह रतिः रथभङ्गाशङ्कायां जपः, अयं वामश्विना रथो मा दुर्गमाद्रुचोभिषत्, तदाभयं न भवति, वस्तादन्यत्र गमने रथं ध्वजं स्पृष्ट्वा[9] जपः । रथादवरुह्य यत्रमोदके दीयतामिति भृत्यान् प्रतिप्रैष्यः । हस्त्यारोहणप्रसङ्गे [10]हस्ती [illegible]ग्रममसिष्टौ वर्चममसि इन्द्रस्य त्वा वज्रेणाभिनिष्ठामि स्वस्ति मामं पारय । अश्वारोहणे मन्त्रः, अश्वयशममसि अश्ववर्चममसि । इन्द्रस्य त्वा वज्रेणाभिनिष्ठामि स्वस्तिमामं पारय, निषेधातिक्रमेणाशक्त्या गर्दभारोहणे त्वाष्ट्रोऽसि विष्णुदैवत्यः स्वस्ति-

---

(१) महीन्तुष्ट । (२) विलोकयन् ।
(३) मत्रिह । (४) रथन्तरं ।
(५) मामीति । (६) इष ।
(७) वभितो । (८) पित्राद्यभिमुखे च दूरात् ।
(९) स्पृष्ट्वा मन्त्रजप. । (१०) हस्तिपममसि ।

मामं पारय, एवम्(१)श्वा प्रोष्ठारोहणे मन्त्रः । शूद्रोऽसि शूद्रजन्मा आग्नेयो वै हिरण्यरेताः उत्तरेण स्वस्ति मामं पारय, मार्गाभिमन्त्रणं, नमो रुद्राय पथि(२)षदे स्वस्ति मामं पारय, चतुष्पथदर्शनेऽभिमन्त्रणं, नमो रुद्राय चतुष्पथसदे स्वस्ति मामं पारय ।

"न दुष्टं यानमारोहेत् कुलछायां न संश्रयेत् ।
अनेकशून्यामटवीं गच्छेन्नैव शून्यगृहे वसेत्" ॥

मनुः,—

"नाविनीतैर्व्रजेद्धुर्य्यैर्न च क्षुद्व्याधिपीडितैः ।
न भिन्नशृङ्गाक्षिखुरैर्न वालधिविरूपितैः ॥
विनीतैस्तु व्रजेद्धुर्य्यैराशुगैर्लक्षणान्वितैः ।
(३)न वर्णरूपसम्पन्नैः प्रतोदे(४)नातुदन्भृशं" ॥
"अविनीतैर्दुष्टैः वालधिविरूपितैः छिन्ना(५)ङ्गैः" ।

तथा, "गवां याने च पृष्ठेन सर्वथैव विगर्हितं" एतेन रथशकटादिषु गोयानं(६) न निषिद्धं, स्कन्धस्य निषेधात् । अतएव विष्णुः, "गोभिर्नादान्तैः" अदान्तैरशिक्षितैरिति ।

स्कन्दपुराणे,—

"प्रदक्षिणं यः कुरुते पठेत्त्वथ महत्तमं" ।
गवाश्वानां निषेधादशिक्षितानां निषेधः ।

(१) एवमश्वार्थी ।
(२) पथसदे ।
(३) उत्सुरूपो ।
(४) मार्त्तदृन् ।
(५) दग्धैः ।
(६) निषिद्धं ।

देवीपुराणे,—

"नासहायो व्रजेद्रात्रौ नोत्पथे न चतुष्पथे" ।

याज्ञवल:, "बाहुभ्यां न नदीं तरेत्, न महावृक्षमारोहेत्" ।

आपस्तम्बः,—

"गर्भभयानारोहणरोहणावरोहणानि वर्जयेत् ।
न विनाशं सांशयिकीं जले मज्जनक्रियां" ।

विष्णुः,—

न "प्रवर्षति धावेत्, न नदीं तरेत् देवताभ्यः पितृभ्य-श्चोदकमप्रदाय नदीतरणप्रसङ्गे तर्पणं कृत्वैव नदीं तरेदित्यर्थः । न चैतन्नदीतर्पणनिमित्तं तर्पणं, तथा सत्येकस्मिन् दिने बहुनदीतरणे बहुतर्पणं स्यात् । किं तु नित्यतर्पणस्यैव निमित्तस्य न काल-नियमः । तेन प्रथमनदीतरणकाले कृततर्पणो न मध्यान्तरे कुर्या-दित्यर्थः । यदा, यदि नदीतरणे तर्पयेदिति तर्पणस्य निमित्तत्वं श्रूयेत, तदा प्रकरणान्तरे प्रयोजनान्यत्वमिति निमित्तमुद्दिश्य विधानात् कर्मभेदः स्यात्, इह च गमनप्रकरणे न नियमो-ऽविज्ञेय इति तत्तर्पणात् पूर्वं नदीतरणं निषिध्यते, तेन नियम-कालेन तर्पणवेलायामित्यनेन नदीतरणप्रसङ्गो नाप्नोति तर्पण-कालात् पूर्वमित्यवगन्तव्यं वचनसामर्थ्यात्, तथा न भिन्नयानेन तरेत् । नौकया भिन्नया ।

मनुः,—

"अचक्षुर्विषयं दुर्गं न प्रपद्येत कर्हिचित् ।
अदृष्टपूर्वमरण्यं न गच्छेद्दुष्टसत्त्वादिशङ्कया" ॥

शङ्खलिखितौ,— "न वधबन्धनसमयं गच्छेत्, न दावं, न च्वेणां प्रभवः, न महात्मनां, वधबन्धनसमयं, वधबन्धनार्थं मिलितजनसमुदायं, दावो वनाग्निः । च्वेणामुपरिस्थानं कलहाय ग्रामादिकमिति माधवस्वामी । शङ्खलिखितौ,— "न वाहैरपानपात्रीयैः पयः पिबेत्" ।

मार्कण्डेयपुराणे,—

"एकाधार्थं प्रयोक्ता ये निःस्वमथादिक नरं ।
यद्दत्वा खादमश्नन्ति न दसे येऽम्भोजनाः" ॥

विष्णुपुराणे,—

"ततः प्रभृति वै भ्राता भ्रातुरन्वेषणं गतः ।
प्रयातो नतति तथा तं न कार्यं विजानता" ॥

देवलः,—

"आर्तायैर्भोजने चापि न त्यजेत् सहयायिनः ।
देवान्दृष्टीन्दृष्टैरेव अनुमप्रदं व्रजेत्" ॥

गौतमः,—

"न माहाय शिरोऽग्निं पर्यटेत्, अभावस्य रात्रौ";

देवलः,— "अग्युद्धृयासवाहनं बहिर्निष्क्रमणं च न कुर्वीत, तथा प्रदोषे— गृहमासमभियायात् त्वरान्वितः" .

वसिष्ठः,—

स्थविरकामान्तरस्त्रीपक्षगणः पन्थाः समावा न परस्मै देय., सर्वैरेव वध्या ऊढमाताया:, शकान् शकटादि, ऊढमाताया विवाहकाले" ।

मार्कण्डेयपुराणे,—

"मूकान्धबधिराणां च मत्तोन्मत्तकस्य च ।
पुंश्चल्याः कृतवैरस्य बालस्य पतितस्य च" ॥

शङ्खलिखितौ,— "पापरोगीगर्भिणीस्नातकप्रव्रजित-विद्यावित् गुणवृद्धेभ्यः पन्था देयः"। देवलः,— "पन्था देयो गवे राज्ञे दुर्बलाय"। आपस्तम्बः,— वर्णानां चेतरैः पन्था देयः, याज्ञवल्क्यः,— पन्था देय इत्यनुवृत्तौ नृपस्तेषामाद्यः स्नातकस्तु महीपते"। अथ गमनसमये शुभाशुभशकुनानि,—

मत्स्यपुराणे,—

"श्वेताः सुमनसः श्रेष्ठाः पूर्णकुम्भस्तथैव च ।
जलजानि च पुष्पाणि मांसमत्स्यास्तथैव(१)च ॥
गावस्तुरङ्गमा नागा बालपशु(२)एकपशुस्त्वजः ।
त्रिदशाः सुहृदोविप्रा ज्वलितोऽग्निस्तथा ॥
गणिका च महाराज! दूर्वा चार्द्रं च गोमयं ।
रुक्मं रूप्यं तथा वस्त्रं सर्वरत्नानि चाप्यथ ॥
औषधानि च सर्वज्ञ! यवाः सिद्धार्थकास्तथा ।
नृवाह्य(३)मान च भद्रपीठं तथैव च ॥
शङ्खं खड्गं पताकाश्च मुदमायुधमेव च ।
राजलिङ्गानि सर्वाणि शवं रुदितवर्जितं ॥

(१) [illegible]। (२) दन्य-एकपशुस्तथा।
(३) [illegible]रासनं यानं च।

घृतं मधु पयश्चैव फलानि विविधानि च ।
स्वस्तिकं वर्द्धमानं च नन्द्यावर्त्तं स कौस्तुभं ॥
नद्यश्च तत्र विन्यस्ता मङ्गलान्यपराणि च ।
अक्षताः श्वेतपुष्पाश्च तथा दर्पण एव च ॥
अञ्जनं रोचना चैव भृङ्गारो माक्षिकं तथा ।
वादित्राणां सुखशब्दो गम्भीरश्च मनोहरः ॥
गान्धारः षड्जऋषभौ ये च शस्तास्तथा स्वराः ।
मेघः[१] शस्ता घनाः स्निग्धा गजहृंहितनिस्वनः ॥
नानुलोमतडित्प्रख्या शक्रचापस्तथैव च ।
अनुलोमा ग्रहाः शस्ता दिक्पतिस्तु विशेषतः ॥
आस्तिक्यं श्रद्दधानत्वं तथा पूज्याभिपूजनं" ।

तथा,—

"यानोत्सुकत्वं मनसः प्रहर्षः शुभस्य लाभो विजयस्य वादः ।
माङ्गल्यलब्धश्रवणं च राजन् ज्ञेयानि नित्यं विजयप्रदानि" ॥

नृवाह्यमानं यानं पुरुषयुक्तदोलादि, भद्रपीठस्वस्तिक-कौस्तुभाः सुवर्णादिघटितसन्निवेशाः । लोमाः,[२] दिक्पतिर्यथा पूर्वस्यां रविः ।

स्मृतिः,—

"यः स्मृत्वा तुलसीं गच्छेत् कार्य्यसिद्धिस्तु तस्य वै ।

---

(१) मेघाः ।
(२) अनुलोमाः एकस्याः ।

तथा,—

"प्रयाणे चारुगरुडारूढं पारिजातहरं हरिं ।
सत्यया सहितं वन्दे सर्वकामार्थसिद्धये" ॥

अशकुनानि, विष्णुः,— "मत्तोन्मत्तव्यङ्गान् दृष्ट्वा निवर्त्तेत, वान्तविरिक्तमुण्डजटिलवामनांश्च काषायप्रव्रजित[१]मलिनांश्च । तैल-गुडशुष्कगोमयेन्धनतृणपलालभस्माङ्गारकवन्ध्यांश्च, लवणक्लीवासव-नपुंसककार्पासरज्जुकेशांश्च । क्लीवो निरेतस्कः, आसवः सन्धानकं । नपुंसकस्त्रीपुंसलक्षणरहितः ।

मत्स्यपुराणे,—

"औषधानि च युक्तानि धान्यं कृष्णं च या[२]दव ! ।
इन्धनं च तथाङ्गारं वशुड्श्च तथा शुभः ॥
अभ्यक्तं मलिनं मुण्डं[३] तथा नग्नं च मानवं ।
मुक्तकेशं ज्वरार्त्तं च काषायाम्बरधारिणं ॥
वन्ध्याः पङ्गुस्तथा चर्म केशं वपनमेव च ।
तथैवोद्धृतसाराणि पिण्याकादीनि यानि च ॥
चाण्डालश्वपचादीनां वधबन्धनपालकाः ।
कुलकः पापकर्माणो गर्भिणी स्त्री तथैव च ॥
कुशभग्नकपालास्थिभिन्नभाण्डानि यानि च ।
रिक्तानि चैव भाण्डानि मृतं साक्रन्दमेव च ॥

---

(१) काषायप्रवर्जितमलिनांश्च ।
(२) पातक ।   (३) कुब्जं ।

शकुनदर्शनत्वगमने दोषः, उभयदर्शनेऽपि गमनमेवा[१]विशकुन-भूयस्त्वे गमने न दोष इति तात्पर्यं ।

अथ तीर्थगमनं, महाभारते,—

"अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ।
न तत् फलमवाप्नोति तीर्थाभिगमनेन यत्" ॥

तथा,—

"अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनं गां च दरिद्रो नाम जायते ॥
यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः ।
तथा पृथिव्या उद्देशाः केचित् पुण्यतमाः स्मृताः ॥
प्रभावादद्भुता भूमेः सलिलस्य च तेजसा ।
परिग्रहान्मुनीनां च तीर्थानां पुण्यता स्मृता" ॥

अथ तीर्थानां पुण्यप्रदत्वेन श्रवणा[२]त्सिद्धस्य च क्षेत्रस्य क्रिया-विशेषप्रवेशमन्तरेण फलजनकत्व-उपदेशवैयर्थ्यात् क्रियाविशेषापेक्षायां तद्गमन-तन्निवासतत्स्नानतद्दानश्राद्धतपस्यादीनां क्रियाणां फलसाधकत्व[३]। तथाचाविशेषाद्गमनमपि फलार्थं, न चान्यानर्थक्यादिति न्यायेनाश्वमेधाङ्गानस्येव गमनस्य निवासस्नानादिकमङ्गिलेन तत्र फलश्रुतिरर्थवादः तौ[४]र्यातपस्नस्य विनापि तीर्थस्नानादिसम्भवे गमनस्य कत्वङ्गानवत्कर्माङ्ग[५]त्वासिद्धेः ।

(१) विशकुन भूयस्त्वे । (२) अवश्याभाव ।
(३) फलसाधनत्वं । (४) अयौतिकस्य गमनं विनापि ।
(५) कर्माङ्गत्वात् सिद्धेः ।

तथा च शङ्खः,—

"तीर्थं प्राप्यानुषङ्गेन स्नानं तीर्थे समाचरे[1]त्।

स्नानजं फलमाप्नोति तीर्थयात्राश्रितं न तु" ॥

इति तीर्थयात्राफलं पृथक् दर्शयति। न च तीर्थयात्राश्रितं तीर्थयात्रापूर्वकं स्नानादिफलमित्येवं परमिति वाच्यं। तीर्थगमनस्य स्नानाद्यङ्गत्वे मानाभावात्,[2] अनैकान्तिकत्वे लिङ्गाभावस्य स्फुटत्वात्, तथा च तावत् फलश्रवणस्य वैयर्थ्यापत्तेः, अत एव लक्ष्मीधरेण स्नानफलं गमनफलं च पृथक् दर्शितं।

महाभारते तीर्थयात्राप्रसङ्गे,—

"यस्य हस्तौ च पादौ च मनश्चैव सुसंयतं।

विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते" ॥

हस्तसंयमो अदत्तादानादिनिवृत्तिः, पादसंयमो अदेशगमनादिनिवृत्तिः, मनोविशुद्धिः कुसंकल्पनिवृत्तिः, विद्या तीर्थविधिज्ञान, तपः उपवासादि, कीर्त्तिः, सच्चरितत्वेन प्रसिद्धिः। तेनाभिशस्तस्य तीर्थफलानधिकारः, अभिशस्त अदोषनिवृत्तिः स्यादेव।

"प्रतिग्रहादुपावृत्तिः, सन्तुष्टो येन केनचित्।

अहंकारनिवृत्तश्च स तीर्थफलमश्नुते ॥

अकल्पको निरारम्भो लघ्वाहारो जितेन्द्रियः।

विमुक्तः सर्वसङ्गैर्यः स तीर्थफलमश्नुते ॥

---

(१) स्नानं समाचरन्। (२) मुख्याद्यभावात्।

अक्रोपनश्च राजेन्द्र! सत्यवादी दृढ़व्रतः।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते" ॥

एतच्च तीर्थयात्रामुपक्रम्य महाभारते ऽभिधानात् तीर्थयात्राङ्गं।

शङ्खः,—

"यस्य हस्तौ च पादौ च मनश्चैव सुसंयतं।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥"

इदं तीर्थस्नानाद्यङ्गं यात्राश्रवणाभावेऽपि तीर्थफलप्रतिबन्धवचनात्।

वायुपुराणे,—

"तीर्थान्यनुसरन्धीरः श्रद्दधानो जितेन्द्रियः।
कृतपापो विशुध्येत किं पुनः शुद्धकर्मकृत् ॥
तीर्थयोनिं(१) न गच्छेच्च कुदेशे नैव जायते।
स्वर्गे भवति वै विप्रो मोक्षोपायं च विन्दति ॥
अश्रद्दधानः पापात्मा नास्तिको च्छिन्नसंशयः।
हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः ॥
कामं क्रोधं च लोभं च यो जित्वा तीर्थमाविशेत्
तेन किञ्चिन्न वा प्राप्तं तीर्थाभिगमनाद्भवेदिति" ॥

ब्रह्मपुराणे,—

"या या काचित्तीर्थयात्रा मुनीन्द्रैः
कृता प्रयुक्ताप्यनुमोदिता वा।
तां ब्रह्मचारी विधिवत् करोति
सुसंयतो गुरुणा चानुयुक्तः ॥

(१) तीर्थयोनिं।

सर्वस्वनाशे त्वथवा नृपस्य स ब्राह्मणानुमत एव कृत्वा ।
यज्ञाधिकारेऽप्यथवा निवृत्ते विप्रस्तु तीर्थानि परिभ्रमेत ॥
तीर्थे फलं यज्ञफलं तु यस्मात् प्रोक्तं मुनीन्द्रैरमरप्रभावैः ।
यद्यस्ति यज्ञेऽप्यधिकारितातः तस्य वरं गृहं गृहधर्माश्च सर्वे ॥
एवं गृहस्थाश्रमसंस्थितस्य तीर्थे गतिः पूर्वतरैर्निषिद्धा ।
सर्वाणि तीर्थान्यपि चाग्निहोत्रतुल्यानि नै[1]वेति वयं वदामः ॥ ”

अत्र च नैव सर्वाणि तीर्थान्यपि चाग्निहोत्रतुल्यानीतिवचनात्तीर्थफलं तीर्थयात्राफलं च श्रौताग्निमतो निषिद्धमिति प्रतिभाति, तत्तु नैव ।

“ सदाग्निमान् सपत्नीको गच्छेत्तीर्थानि यत्नतः ।
सर्वपापविनिर्मुक्तो यथेष्टं गतिमाप्नुयात् ” ॥

इति वचनेन साग्नेरपि तीर्थयात्राफलकल्पनात् ।

किंतु,— “ प्रधानं वैदिकं कर्म गुणभूतमथेतरत् ।
गुणनि[2]ष्ठोऽनिशमाद्यं बाधयन् यात्यधोगतिं ” ॥

इति सामाद्युक्तकर्मविरोधमूलककर्मवर्जनस्य स्नातकव्रतत्वेन गणनात् । दर्शाग्निहोत्रादिकर्मलोपनिमित्तभूतं त्रेताग्निमुत्सृज्य तीर्थगमनं निषिध्यते ।

तथा च शिष्टाः,—

"धर्मार्थी प्रवसेद्विद्वान् धर्मार्थी न कदाचन" ।

इति धर्मार्थप्रवासस्य निषेधं स्मरन्ति, तीर्थयात्रादिफलमपि यज्ञादिविरोधि निषिध्यते । यथाग्निहोत्रवतामयेऽग्निहोत्र-

(१) दैवेति । (२) गुणदिष्टो ।

होममकृत्वा तीर्थस्नानादि[१]कार्य्यमित्याशयः, एवं तत् श्रौतविरोधिरूपेण तीर्थगमनस्नानादेर्निषिद्धत्वात् यात्रानिषेधातिक्रमेण तीर्थस्नानादिकरणे यात्रानिषेधातिक्रमदोषः स्वल्पः। तीर्थस्नानादिफलं च भूयः संपद्यत इति [२]तेषां विकल्पनमसत्कल्पनमेव, [३]यथा यात्रावत् स्नानादेरपि श्रौतयज्ञ[४]विरोधिरूपेण निषेधः। न च विहितस्य निषेधासम्भवः, विहितेऽपि कर्मणि कर्त्तृविशेषस्य निषेधात्। यथा विहिते सान्नाय्येनासोमयाजी सन्नयेदित्यत्र [५]सोमयाजीकर्त्तृकनिषेधः। एवमिह तीर्थस्नानादौ यज्ञाधिकारिकर्त्तुर्निषेधः।

तदुक्तं भट्टैः,—

विधेव [६]जायते कर्त्ता विशेषेण प्रतिक्रियां।
योग्यत्वाप्रतिषिद्धत्वविशेषोपपदान्वयैः॥

न च तीर्थगतिर्निषिद्धेत्युपक्रमात्, यात्राया एव निषेधः। यज्ञाविरोधिमात्रियात्रानिषेधाभावेन यज्ञविरोधितीर्थगमनत्वेन निषिध्यत्वमसोत्या यात्रात्वेन विशिष्य विशेषणे वाक्यभेदात्। स्नानाद्युद्दिश्य यात्राया एव च [७]तीर्थस्नानादेरपि यज्ञविरोधोऽस्त्येव, तथा च, तीर्थं फलं यज्ञफलं। सर्वाणि तीर्थान्यपि चाग्निहोत्रतुल्यानि [८]नैवेति तीर्थाश्रितकर्ममात्रपरामर्शो दृश्यते।

---

(१) न कार्य्यं। (२) केषांचित् कल्पनमेव।
(३) यतो। (४) विधि।
(५) असोमयाजकर्त्तृकनिषेधः। (६) ज्ञायते।
(७) तीर्थयात्राया च। (८) नैव।

न च परिकल्प्यलिंजं तथेत्येवं, प्रवासविधाने यज्ञानुष्ठानविरोधाभावः। अन्नुपस्थानाज्यावेक्षणांगहीनावश्यकत्वात्, न च स्नानादिप्रधानं। प्रमेयत्वेन बलीयः, निषेधनान्यविषयत्वादाचमनादौ निषेधाभावेन वैषम्यात्। न च श्रुतिविरोधे स्मृत्यर्थबाधकस्य न्यायसिद्धत्वेनास्य विधेयत्वं, न्यायमात्रस्यापि स्नातकव्रतमध्यपाठेन विधानोपपत्तेः, तस्मात् तीर्थस्नानादिफलमुद्दिश्य श्रौताग्निमतः प्रवासे तीर्थयात्राफलं [1]तीर्थस्नानादिफलं न च भवत्यधिकाराभावात्। ब्राह्मणस्य वेश्यस्तोमवत्।

यदा तु,—

"निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा।
प्रवासे कार्य्यवान् विप्रो तथैव न चिरं क्वचित्" ॥

इति छन्दोगपरिशिष्टात्, आपत्सु प्रोषितोऽग्निवेलायां वाग्यतः प्रतिदिनमग्नीन् मनसा ध्यात्वा मन्त्रेणाङ्कनं ज्ञात्वा मनसेत्यादि हारीतवचनात्।

"पुत्रकौतोहलवर्गस्य परिभूतस्य शत्रुभिः।
मासद्वयं प्रवासोऽस्तु[2] मरणेनाहिताग्निवत्" ॥

इति प्रामाणिकलिखनाच प्रवास आपत्काले क्रियते तदा दैवात्तीर्थप्राप्तौ तीर्थस्नानादिफलं स्यादेव, प्रवासस्य तीर्थस्नानाद्यर्थत्वेन यज्ञविरोधाभावात्, यज्ञविरोधि[3] देवतीर्थस्नानादावधिकारो

---

(१) तीर्थयात्रा। (२) यस्तो।
(३) न्तेव।

(१)वैकल्यते, यथा तीर्थे एवोत्पन्नस्य तीर्थवासपरस्य चाहिताग्नेरपि तीर्थस्नानादिफलं यज्ञविरोधाभावादेव ।

तथा, मत्स्यपुराणे,— (२)काश्यामधिकृत्य,—

"तत्र चेष्टं कृतं दत्तं तपस्तप्तं कृतं च यत् ।
सर्वमक्षयमेवास्मिन् (३)विमुक्ते न संशयः" ॥ इति ।

चेष्टे यज्ञादिकर्म दर्शयति, इदं त्रेताग्निमत्परं, केवलं स्मार्त्ताग्नेस्तु तीर्थयात्रा तत्पूर्वकं स्नानादिकं (४)दानमनिषिद्धं, धर्मार्थ-प्रवासोऽपि तस्मात्स्यैव यज्ञाधिकारवत एव तीर्थयात्रादिनिषेधो न च केवलस्मार्त्ताग्नेर्यज्ञाधिकारोऽस्ति, यज्ञपदस्य त्रेताग्निसाध्ययज्ञ-परत्वात्, अन्यथा पञ्चयज्ञाधिकारस्यापि(५) यज्ञादिसाधारणेना-(६)व्यापकत्वापत्तेः । अतएव समाचारोऽप्येवं । सदाचारस्याप्यो-विध्यर्थनिर्णायकत्वेन प्रामाण्यमिति (७)शाङ्करभाष्यप्रदीपे प्रपञ्चित-मस्माभिः, अत्र भारते तीर्थयात्रापदेनोपक्रम्य क्षेत्रपुण्यायतन-यात्रायामपि कथनात्तीर्थपदं म्रक्षिन्यायेन पुण्यस्थानोपलक्षणं । तेन पुरुषोत्तमगयाकुरुक्षेत्रादावपि तीर्थयात्राविधिर्ज्ञातव्यः ।

ब्रह्मपुराणे,—

"यो यः कश्चित्तीर्थयात्रां तु गच्छेत्, सुसंयतः स च पूर्वं स्वगेहे।
कृतोपवासः शुचिरप्रमत्तः, संपूजयेद्भक्तिनम्रो गणेशं" ॥

---

(१) त्रैकाल्यस्मृतेः । (२) काशीं ।
(३) विमुक्ते । (४) वा निषिद्धं ।
(५) पञ्चाग्न्यादि । (६) व्यावर्त्तक ।
(७) शाबर ।

देवान् पितॄन् ब्राह्मणांश्चैव साधून्,
धीमान् पितॄन् वित्तशक्त्या प्रयत्नात्।
प्रत्यागतश्चाथ पुनस्तथास्तु;
देवान् पितॄन् ब्राह्मणान् पूजयेत्तु" ॥

अथ [1]उभफलकामनया तीर्थयात्रां संकल्प्य स्वगृहे कृतोपवासो गणेशं पूजयेत्, ततोऽभीष्टदेवं पूजयित्वा श्राद्धं ब्राह्मणानां पूजनं, पितॄन् वित्तशक्त्येत्यनेन धनवता वक्ष्यमाणेन श्राद्धं कार्य्यमित्युक्तं, प्रत्यागत्य पुनर्देवब्राह्मणं श्राद्धं च, एतावत्तीर्थयात्राङ्गं नित्यं, यस्य तु प्रत्यागमनं नास्ति ततः प्रभृति तीर्थं एव वासः, तस्य प्रत्यागतदेवपूजाद्यभावः।

यत्तु,—

"विधाय कर्पटीवेशं कृत्वा ग्रामं प्रदक्षिणं।
ततः प्रतिदिनं गच्छेत् प्रतिग्रहविवर्जितः" ॥

इत्यादि[2]गयाश्राद्धाङ्गं, नान्यत्र तत्प्रसङ्गः, प्रयागाद्यतिरिक्ततीर्थगमने यानविषेधदर्शनात्तीर्थान्तरे यानेन गमनेऽप्यविरोध इति लक्ष्मीधरः।

"[3]गयायां भास्करक्षेत्रे मातापित्रोर्मृतेऽहनि।
मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः॥
वर्जयित्वा कुरुक्षेत्रं विशालां विरजं तथेति"।

तत्र उपवासः, मुण्डनं शिखावर्जनकेशवपनात्मकं कर्त्तृसंस्काररूपं। तीर्थस्नानदानश्राद्धादिकपकर्म्माङ्गं, यत्तु देवलवचनं,

(१) उभ्रु। (२) तदप्यगयायात्राङ्गं। (३) गङ्गायां।

"तीर्थादनुगम्य तदर्थमनभिगम्य व्रतोपवासनियमयुक्तस्त्वहमवगाह्य मानस्तीरात्रमुषित्वा सर्वपापैर्विमुच्यते । स्वस्तिमांश्च भवति तत्तीर्थयात्राप्रकरणानामाम्नायपृथगेव फलार्थं ।

यत्तु महाभारते,—

"अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्वा कांचनं गां च दरिद्रो नाम जायते" ॥

तदपि त्रिरात्रोपवासतीर्थाभिगमनकाञ्चनगोदानादीनि दारिद्र्याभावफलानीति ज्ञापयति । तीर्थश्राद्धे विशेषः,—

देवीपुराणे,—

"अकालेऽप्यथवा काले तीर्थे श्राद्धं तथा नरैः ।
प्राप्तैरेव सदा कार्य्यं कर्त्तव्यं पितृतर्पणं ॥
पिण्डदानं च तत् शस्तं पितृणामपि दुर्लभं" ।

तथा,—

तीर्थेषु ब्राह्मणं नैव परीक्षेत कथंचन ।
सक्तुभिः पिण्डदानं च [(१)]यावकैः पायसेन वा ॥
कर्त्तव्यमृषिभिर्दृष्टं पिण्याकेन गुडेन च ।
श्राद्धं तत्र प्रकुर्वीत अर्घावाहनवर्जितं ॥
श्वध्वांक्षगृध्रकाकानां नैव दृष्टिहतं च यत्" ।

एवं तत्तद्दानानां तीर्थविशेषात् फलविशेषः । तपःपूजायज्ञादीनां च तीर्थ एव कृतानां फलविशेषः, तर्पणं च पृथक्

(१) मंथाद्यैः ।

तीर्थप्राप्तिनिमित्तकं, तन्त्रेण स्नानाङ्गतर्पणमिद्दिश्य तीर्थप्राप्तिदिने स्नानाङ्गस्यापि [1]तन्त्रस्नानादिपूर्वकं तीर्थप्राप्तिनिमित्तकं तर्पणमावश्यकं।

एवं तस्मिन् दिनेऽनेकतीर्थप्राप्तौ श्राद्धं [2]तर्पणाङ्गं वर्त्तते।

पैठीनसिः,—

"षोडशांशं स लभते यः परार्थेन गच्छति।

अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति॥

प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत्।

मज्जयेत्तु यमुद्दिश्य अष्टभागं [3]लभेत्तु सः"॥

तत्र मन्त्रः।

"कुशोऽसि [4]संप्रवृत्तोऽसि ब्रह्मणा निर्मितः पुरा।

त्वयि स्नाते स च स्नायाद्यस्यार्थे ग्रन्थिबन्धनं"॥

इतिशिरः।

शङ्खः,—

"नृणां पापकृतां तीर्थे पापस्य शमनं भवेत्।

यथोक्तफलदं तीर्थं भवेत् शुद्धात्मनां पुनः"॥

अथ पादचापल्यं।

मनुः,— "न पाणिपादचपलः," चापल्य वृथा चेष्टा।

देवलः,— "वह्निं नातिक्रमेत्पदा," गौतमः,— "न पदा न मासनमाकर्षेत्"।

---

(१) मन्त्र। (२) तर्पणं च।

(३) लभेत सः। (४) संप्रवृत्तोऽसि

शङ्खलिखितौ,— "न पदा भूमिमभिहन्यात्," आपस्तम्बः,— "पदा (१)पादप्रक्षालनमधिष्ठान च वर्जयेत्, (२)प्रेंखोलनं पादयोः जानुनि (३)"गत्यध्मानं जंघायाः"। (४)प्रेंखोलनमितस्ततश्चालनं, शङ्खलिखितौ,— "न पादं पादेन क्षालयेत्, न दर्भैः परिमृज्यात्," विष्णुः,— "न पादौ प्रतापयेत्, न कांस्यभाजने पादौ धावयेत्"।

आपस्तम्बः—

"अग्निमापोब्राह्मणं गां देवतादारं प्रतिवातं।
शक्तिविषयेणाभिसारयेत् पादाविति श्रियः" ॥

याज्ञवल्क्यः,—

"गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत्।
नाग्निं गां ब्राह्मणांश्चैव पादेनाधितिष्ठेत्" ॥

आपस्तम्बः,—

"देवतानां राज्ञश्च ब्राह्मणस्य पादस्पर्शं वर्जयेत्"।

आपस्तम्बः,—

"व्यतिक्रामेत्तु (५)अवर्तीं ज्वलन्तं ज्वलनं तथा,
क्षुद्रप्रवाहं न लंघयेदित्यर्थः"।

तथा,—

"नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत्।
अधस्तान्नोपदध्याच्च न चैनं पादतः कुर्यात्" ॥

---

(१) पदस्य क्षालनं। (२) प्रेंखोलनं।
(३) गत्याधोनं। (४) प्रंखोलनं। (५) अवर्तीं।

अग्निना प्रयत आसीत्; इषुमात्रादित्येके। न चैन-
मुपधमेत्। खट्वायां नोपदध्यात्, इषुमात्रदेशादशुचिर्नाग्निसमीपं
गच्छेदित्यर्थः।

पैठीनसिः,— "नापुष्पितं वृक्षमारोहेत्"।

विष्णुपुराणे,—

"नदीतं वेश्म न विशेन्नारोहेत् शिखरं तरोः"।

याज्ञवल्क्यः,—

"नोदाक्षणगलानाकि नोच्छिष्टोऽपि यदा स्पृशेत्"।

विष्णुपुराणे,—

उपतिष्ठेन्नवक्तालीच्चिरं तिष्ठेन्नरोऽस्थितः[१]।
नातीव जागरस्वप्नौ तद्वत् [२]नोत्कासिके बुधः॥
न सेवेत तथा शय्यां व्यायामं च नरेश्वरः।
दंष्ट्रिणः शृङ्गिणश्चैव प्राज्ञो दूरेण वर्जयेत्॥
अवश्यायं च राजेन्द्र! पुरो वातातपौ तथा"।

देवलः,— "धर्षयेन्नापदं यदा, अग्नौ न प्रक्षिपेदग्निं नाग्निं
प्रशमयेत्तथा अयानाक्रमणमभिधेयानि"।

मनुः,—

"देवतानां गुरो राज्ञः स्नातकाचार्ययोस्तथा।
नाक्रमेत् कामतश्छायां बभ्रुणोर्दीक्षितस्य च"॥

बभ्रुः कपिलः।

---

(१) न चोत्थितः। (२) स्थानासने

तथा,—

"मध्यंदिनेऽर्द्धरात्रे च श्राद्धं भुक्त्वा च मार्मिकं ।
सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथं ॥
उद्वर्त्तनमपस्नानं विण्मूत्रे रक्तमेव च ।
श्लेष्मनिष्ठ्युतवान्तानि नाधितिष्ठेत कामतः ॥
वैरिणं नोपसेवेत सहायं चैव वैरिणः ।
अधार्मिकं तस्करं च परस्यैव च योषितं" ॥

उद्वर्त्तनं स्नानमलापकर्षणपिष्टादि, अपस्नानं स्नानोपयुक्तजलं, निष्ठ्युतमुद्गीर्णं ताम्बूलादि, यमस्मृतौ,— प्राज्ञः सति कपिलगवां छायां नाक्रमणायेत्यधिकं, प्राज्ञः प्राप्तबुद्धिः, क्षत्रियादिरपि, याज्ञवल्कीये[१], ऋत्विक् परस्त्रीछायां नाक्रमेदित्युक्तं ।

यमः,—

"स्वकीयां नाक्रमेत् छायां क्लीबेन पतितेन च ।
चाण्डालेन द्विषद्भिश्च नित्यं रोगान्वितेन च" ॥

शङ्खलिखितौ,— "नोद्धतैः कुहकैः सहैकतस्तिष्ठेत्," उद्धतोऽविनीतः, कुहको वशीकरणादिपरः, विष्णुः,— "चतुष्पथमधितिष्ठेन्न च रात्रौ वृक्षमूलं, न शून्यालयं, शूलावन्धनागारं," हारीतः, आवपनापमार्जना च, स्नाने तु न भस्मास्थिकपालकेशमयचयान्नाधितिष्ठेत्, आवपनं द्रव्यस्थानयोग्यं गोण्यादि, अपमार्जना मार्जनानन्तरं तत्साधनकुशादि, कपालं खर्परः,

(१) याज्ञवल्क्यः,—।

